||हिमांशुगौडविरचितम्||

# ||समर्थश्रीशतकम्||

********

क्वचिद्गीताभाष्यं क्वचिदथ शुभं व्याकरणजं
वदेत् तथ्यं हृद्यं नवलविधिभिर्भाष्यहृदयं
क्वचिच्छान्ते वृन्दाविपिननिलये जप्यनिरतस्
समर्थश्रीस्वामी नयनपथगामी भवतु मे||१||

क्वचिद्देवीपूजाविधिसुखकरं दिव्यगतिकं
क्वचिद्दन्तिश्रेष्ठत्वपरकसुभाष्यं च वदति
क्वचिद्विद्वज्जीव्येक्षणकथनवार्तासु निरतस्
समर्थश्रीस्वामी नयनपथगामी भवतु मे||२||

विलोक्य श्रीविष्णवाश्रमयतिपवित्राश्रममहो
बिहाराख्यं घट्टं भवति नवतौजस्कहृदयो
रमेशे चोमेशे सममतियुतश्शास्त्रसदनस्
समर्थश्रीस्वामी नयनपथगामी भवतु मे||३||

अघोरेभ्यो घोरेभ्य इति शुभमन्त्रस्य कथने
महत्वाभापूर्णो भवति सहसा भावुकवच:
कवित्वे शास्त्रार्थे द्रुतमतिगतिर्देवयतिकस्
समर्थश्रीस्वामी नयनपथगामी भवतु मे||४||

क्वचिद्दान्तश्शान्तश्श्रयति हरिपीयूषसरणीं
क्वचिज्जीर्णे शीर्णे सुरसलिलनद्यालय इह
जपेद्गङ्गे गङ्गेऽश्रुनयनयुतो भावुकतया
समर्थो गङ्गात्मा नरवरनिवासी भवतु मे||५||

हृदा बाबागुर्वाशयविदथ तेषाम्प्रियतरो
मुदा विष्णुश्रीणां चरणरजसां सेवनपरस्

सदा यज्ञेशश्रीप्रबलमुनिसेवाव्रतरतस्
समर्थोऽर्थप्रार्थाविमुखहृदयो जीवतु चिरम्॥६॥

सवित्राभादीप्तो यमनियमचारी द्विजहितो
गवाम्प्रेमी नानामखविधिसुसारी शिवरतो
धियां सद्बालानामनुदिनमहो प्रेरणपरस्
समर्थात्मा स्वामी हितकरवचश्श्रावयतु मे॥७॥

गणाधीशे श्रीशे नगपतिसुतेशेऽश्रुनयनैस्
सुरेशे वागीशे जलपतिपदे भावभरितैर्
मखेशे वागीशे सरससरलैर्वाक्यनिचयैश्
समर्थः पुण्यात्मा जनगणमहो प्रेरयति वै॥८॥

त्रिपुण्ड्रं धृत्वा यश्श्रयति शिवतां शैवपुरुषस्
त्रिशूलं दृष्ट्वा यो व्रजति निजधर्माह्वरतस्
त्रिकालं हृष्ट्वा स्वीकुरुत इव सर्वं हरिमयं
समर्थो गोपालो दिशतु नवगीतं कविमिमम्॥९॥

पचौरीवार्ताभिर्हसनपरकाभिश्च मुदितः
पचौरीज्योतिर्ज्ञानलभनसदिच्छाश्रितमनाः
पचौरीसम्बन्धे विविधकथनाख्यान-रसिकः
समर्थश्रीस्वामी नरवरनिवासी भवतु मे॥१०॥

"पचौरीतिख्यात्या प्रथितसुरदूतेन विदुषा
फकीराबादाख्ये विमलजनजुष्टे सुविपिने
विनोदार्थं स्वस्य व्यरचि भवनं जीर्णवपुषा"
इति श्रीबाबोक्तिं सफलपरकां वेत्ति स यतिः॥११॥

पचौरीविज्ञानां दशसमनिवासैः प्रगतिभिः
पचौरीव्याख्यानैर्व्रजति नवतथ्यं यतिवरः
पचौरीहास्यैश्च व्यपगमितदुःखो भवति यस्
समर्थश्रीस्वामिन्! नरवरनिवासी भव पुनः॥१२॥

पचौरीसामर्थ्यं नरवरगतं वेत्ति च य:
पचौरीदिव्यार्थं सकलजनतां यः प्रवदति
पचौरीज्ञानानां प्रतिभवपुषां सारणरतस्
समर्थश्रीर्नूनं नरवरविभाभि: प्रकटित:||१३||

स वै बाबागुर्वाश्रमबटुकवीक्षामुदितहृत्
स वै बाबागुर्वाशयमथ तनोति स्ववचसा
स वै बाबागुर्वाश्रयगतजनैर्हृष्यति सदा
समर्थो बाबागुर्वतिशयदयाभृत्त्वमयते||१४||

समालोक्यैवं यस्सुरसलिलनद्याश्शुभतटं
"अहो प्राप्तो गेह"स्त्विति मनसि नैजे प्रमनुते
वयो नीतं येन श्रुतिशरणतायां स हि यतिस्
समर्थश्शान्तात्मा शतसमसुखायूंषि लभताम्||१५||

समालोक्य च्छात्रान्स्वपठनदिनानि स्मरति य:
पुनर्दृष्ट्वा तान् यो नरवरदिनानि स्मरति हो
क्वचिच्चाञ्चल्येनापि तदिव समावर्तनमना:
समर्थश्छात्रात्मा नरवरसुवासी भव पुनः||१६||

विहायार्थीं चिन्तां गृहजनितदु:खात् पृथगहो
समुज्झित्यात्मीयानिव सकलमोहप्रदजनान्
वयस्यादौ सेवेत नरवरभूमिं वदति यस्
समर्थो बाल्यस्मारणनयितपन्था: भवतु मे||१७||

प्रतिष्ठां सम्मानं धनजनपदादीन् क्व गणयेत्
महिष्ठां सत्कीर्तिं कविकुलसुलभ्यां क्व च पुनः
सुखं छात्रावस्थागतमिति भवेद्भावुकमनास्
समर्थश्छात्रात्मा हरहरसुघोषी भव पुनः||१८||

कुरुक्षेत्रे पुण्ये प्रबलगुरुभिर्य: कनखले

क्वचिन्मुम्बय्यां वा भरतपुरभूमौ मखकर:
हरिद्वारे दिल्ल्यां हनुमति गणे[1] वा शिवपुरे
समर्थो यज्ञात्मा हवनमहिमानं वदतु माम्॥१९॥

स्वकीयैश्शिष्यैर्यश्चरति सह रुद्रस्य यजनं
पुनर्गत्वैकान्ते हरिहरगतं चैव भजनं
मृषा मायैषा रे कुरुत सुकृतानीति वदति
समर्थो वैराग्याश्रितहृदयतो यातु शिवताम्॥२०॥

सहस्रैस्सद्विप्रैस्सह यजनकृद्वैदिकवरैस्
सहस्राख्याभिश्श्रीगणपतिसमर्चाश्च कुरुते
सहस्रश्रीशाख्या: जपति जयकाव्यार्थसरणस्
सहस्रैश्चिन्त्यैरावृणुत इव लक्ष्यं स सुयमी ॥२१॥

विनोदार्थं विद्याभ्यसनमिति शिष्यान् प्रवदति
प्रमोदार्थं शास्त्राश्रयणमिति दृश्यानि नुदति
प्रबोधार्थं गीतामनुदिनमरे! गायत समे!
समर्थो गीतात्मा विविधगतिभिर्याति शुभताम्॥२२॥

विवेकेनैवास्ति प्रतिदिनमहो नव्यसुगतिर्
विवेकेनैवाप्यं सकलविपदां चापि शमनं
विवेकान्नायान्ति रिपुजनगणा: पार्श्वमपथ ते
विवेकात्मा स्वामी नरवरनिवासी भवतु मे॥२३॥

विवेकान्नानन्द: परतर इति श्रीयत इव
विवेकैर्जीवेद्योऽवनतिरपि पश्येन्न सुजनं
विवेकैस्साफल्यं झटिति लभतेऽल्पेन च पथा
विवेकभ्राजात्मा नरवरसुखानि श्रयतु मे॥२४॥

सदा देवेशार्चा फलति निरयं चैव हरति
अहो देवेशार्चा जगति जयदाऽलोकसुखदा

[1] हनुमानगढ़े इत्याशयः। हिन्द्यपभ्रंशत्वेन हनुमानगढ इति। तत्संस्कृते हनुमद्गढ इति स्यात् , तदेव व्यस्ततया हनुमति गढ इति।

पुनर्देवेशेच्छाश्रितमिति जगज्जालमखिलं
सदेवेशस्स्वामी[2] नरवरविभावी भवतु वै॥२५॥

"न वै चिन्ता कार्या यदि सुखगतिर्नैव तव हे!
न वै धैर्यं हेयं यदि विपदि मग्नस्सुजन रे!
समं साधिष्यत्येव कपिसमर्चेति[3]" वदति
स चिन्ताग्न्यप्स्वामी कपिवरकथाश्श्रावयतु माम्॥२६॥

"कपीशो रामात्मा रमयति च चित्तं हरिपदे
कपीशो ध्यानात्मा भजति हरिरित्येव सततं
कपीशश्शुद्धात्मा बलवदखिलेशो" वदति यः
कपीशात्मा स्वामी हनुमति सुनिष्ठो भवतु मे॥२७॥

हनूमान् भावाढ्यो हनुमति शिवत्वं श्रयत रे
हनूमान् प्रेमाढ्यो हनुमति हरित्वं जपत रे
हनूमान् श्रीबाबागुरुफलकरश्चेति वदति
हनूमद्बाबात्मा नरवरसुखात्मा भवतु मे॥२८॥

"सदा राधे राधे रटत रटते"ति प्रवदति
"मुदा श्यामश्श्यामस्त्विति रसनयास्वादयत रे
पुना "राधे श्यामा"ह्वयत हृदयैर्भक्तसुजनाः!"
स राधाश्यामात्मा रमयतु सुरम्ये हरिजनान्॥२९॥

सुधीनामानन्दं तनुत इव काव्यैर्हरिमयैः
प्रधीनामानन्दं वितनुत इव श्रौतवचनैः
जनानामानन्दं हरहरवचोभिः प्रकुरुते
स आनन्दात्मा स्यान्नरवरसुगन्धिर्भव पुनः॥३०॥

अहो बाबावैदुष्यमिति स निमज्जेन्मधुरसे

---

[2] देवेशेन सहितः सदेवेशः

[3] सर्वं साधयति हनूमान् इति शिवराजविजयेऽपि तथैवात्र हनुमतः सर्वसाधकत्त्वात् प्रशस्तिः।

अहो बाबाचर्येति मनसि विचिन्त्यैव नमति
अहो बाबाशीर्वादफलवितरत्वं द्विजगणे
स बाबात्मा स्वामी शिवनिलयवासी भवतु वै॥३१॥

शिवो ध्येयो गेयो निखिलजनताभिश्च भुवने
शिवो गण्यो मान्यो बहुजनसमाजैरपि सदा
शिवान्नान्यत्किञ्चित्परतरमिति प्राह च यश्
शिवप्रेमी स्वामी शिवजपसुदीक्षां प्रतनुते॥३२॥

गणेशादेतद्वै भवति जगदित्येव लभतां
गणेशे चिन्ता ते प्रतिदिनमहो वृद्धिमयतां
गणेशाय प्रेम्णा मधुमयपदार्थान् कुरुत रे
गणेशात्मा स्वामी गुणगणगिरश्चोद्गिरतु माम्॥३३॥

"गणेशाज्जायन्ते सकलभुवनानीति वदति
गणेशैः पाल्यन्ते विविधजनताश्चेति सरति
गणेशो वै हन्तीत्यखिलजनिविश्वानि च पुनो
गणेशात्मा ज्ञानी नरवरनिवासी भवतु मे॥३४॥

गणेशाज्जायेत,प्रियपतिगुरौ सृष्टिरखिला
श्वसेन्नृत्येत्स्फूर्त्त्या वसति हसति श्वेतवसना
गणेशे लीयेत प्रलयसमये लोकसरणीर्"-
वदेद्यस्स स्वामी गणपतिकथाश्श्रावयतु माम्॥३५॥

हिमांशोः काव्यानि श्रयणरमणीयानि वदति
हिमांशोर्भाव्यानि प्रियतरमयानीति मम वै
हिमांशोर्या शैली न न न न न चान्यस्य विदुषो
वदेद्यस्सस्स्वामी नरवरनिवासी भवतु मे॥३६॥

गुणाकर्ष्या श्रीश्च श्रमपरजनैर्भाग्यविरतैः
क्वचिद्भाग्यैर्लभ्या सुकृतजनितं भाग्यपदकं
अहो पुण्यापुण्ये सुखमसुखमेते प्रददतः

वदेद्यस्सस्स्वामी नरवरनिवासी भवतु मे||३७||

घृणा द्वेषश्चेर्ष्या परगुणविमानोऽतिकथनं
सदालस्यं हास्ये परजनविनिन्दैव नितरां
इमे दोषा: विद्वांसमपि नरकत्वं प्रददति
वदेद्यस् सस् स्वामी नरवरनिवासी भवतु मे||३८||

रमेशस्याशीर्वै फलति मनुजस्योदयविधौ
रमेशस्यार्चा वै सकलभयहन्त्री सुखकरी
रमेशो नौका दुस्तरभयभवाब्धेश्च तरणी
समर्थश्चेत्युक्त्वाऽश्रुनयनयुतो ध्यायति हरिम्||३९||

रमेशश्चोमेशो नहि नहि पृथक्तत्त्वमथ रे
रमेशश्चोमेशो नहि नहि विभाज्यौ मतिधनै:
रमेशश्चोमेशो नहि न विपरीतौ क्वचिदपि
समर्थश्चेत्युक्त्वा विशदयति तत्त्वं स्ववचसा||४०||

रमेशस्याह्वानं कुरु कुरु विहायाखिलमलं
रमेशस्य ध्यानं कुरु कुरु सुखं तत् फलकरं
रमेशस्य ज्ञानं नहि शतशतश्रौतवचसा
सुशक्यं, यो वक्ति प्रियतरपथं निर्दिशतु व:||४१||

प्रशंसां यस्याहं ह्युदयपुरमेवाङ्भुवि वै
प्रकुर्वे संस्थित्य श्रुतिपथपरस्येह सुविधै:
सुपद्यैस्सच्चिन्तोन्नतिकरसुमार्गा शिखरिणी
शतं सौख्यं गच्छेन्नरवरपुरात्मा यतिवर:||४२||

मया छात्रावासे द्विजजननिवासे दशसमैर्
व्यतीतो य: कालो नरवरधरण्यां श्रुतिपदै:
समुत्कीर्णस्स्वर्णाक्षरसुरगिरा नीलगगने
इति श्रित्वा कल्पां व्रजति सुखतां वै यतिवर:||४३||

क्वचिद्गङ्गाक्रोडे सकलदिवसे कूर्दनमहो
क्वचिज्जाह्नव्यम्बौ तरणशरणं मोदितहृदा
मिथो हस्तैस्तत्राम्बुनिचयसमुत्ताडनमिह
इति स्मृत्वा स्मेरैर्नरवरदिनानि स्मरति स:||४४||

क्वचिद्रुद्रीपाठे स्वगुरुगिरयाऽन्यस्य च गिरा
कथं मन्दीकार्येति लयसरणीं वाप्य मुदित:
पुनश्शैलीवैशिष्ट्यमुत गतितीव्रत्वमथवा
क्व वैलम्ब्यै: पाठ्यं,नरवरितया वेत्ति स यति:||४५||

गुरूणां पाठेषु श्रयतु कथमेवावगमनं
पुनस्तैर्यत्प्रोक्तं कथमिव विजानातु झटिति
फणिप्रोक्तेस्तात्पर्यमपि पदभाष्ये निगदितं
समं छात्रे काले नरवरमये वेत्ति स सुधी:||४६||

क्वचिद्रुद्राध्याये पठनसमये मित्रविगर्तिं
समालोक्य स्वारीं त्रुटिमपि निबोध्याशुमतिक:
सहाध्येतृप्रीतिं व्रजति वयसश्चादिसमये
समर्थश्छात्रात्मा नरवरदिनानि स्मरतु मे||४७||

अहोऽधीत्यात्रैव प्रथितकरपात्रस्य विदुषो
यशांसि श्रेयांसि क्रतव उत विश्वे धवलिमा
सरन्ति श्रीलानि श्रुतिमयवपूंषीव जगते
समर्थस्तत्रैवं नरवरगृहेऽधीतविबुध:||४८||

"द्विजत्वं क्षात्रं वा सकलमपि जन्माश्रितमिति
वणिक्त्वं शूद्रत्वं भवति मनुजानां च जनित:
जनित्वं पूर्वस्मिन् सुकृतकुकृताद्यैश्च भवति
चतुर्वर्णत्वं तत् त्वृषिनिगदितं"- वक्ति स यति:||४९||

सदा मन्त्रे तन्त्रे विधिलिखितयन्त्रेऽप्यथ पुनः
कुरु श्रद्धां बद्ध्वैकनियमविधौ चित्तसरणीं
फलन्तीत्थं चैते परधनकलत्रे विरतित:

स मन्त्रश्रद्धालुर्नरवरनिवासी भवतु मे॥५०॥

"न विश्वस्ता: नीचे मलिनयवने हिन्दपुरुषा:!
भवेयु,मैत्रीं नाचरत ह्रतैषां च बलताम्
इमे गोघ्ना:, देशादपसरणविधानेऽपि सततं
यतध्वं",स्वामिश्रीर्वदति युवकान् सत्यवदन:॥५१॥

"सुहृत्वं नैतेषां भवति निजधर्मात्पृथगरे
प्रियत्वं नो हिन्दौ दधति मनसीमे क्वचिदपि
स्वसङ्ख्यावृद्ध्यै ये जनमतविवृद्ध्यै प्रयतिन:
इमान्देशद्रोहप्रियकुमनसो घातय"- वदेत्॥५२॥

"न सम्बन्धश्चैभिर्भवतु भवतामार्थिक इतो
म्रियन्तेऽर्थाभावादयतनत एते निरयिन:
बलाद्बुद्धिश्श्रेष्ठा ह्यसुरहनने तां श्रयत रे"
इति प्राह स्वामी -"नयपथमयध्वं हरिजना:!"॥५३॥

"शिवं दुर्गां विष्णुं दशरथसुतं यादववरं
जलेशं मेघेन्द्रं बलद-हनुमन्तं दिनकरं
हुताशं मृत्युं श्रीधनकरकुबेरं स्वरपतिं
नमेद्भक्त्या" स्वामी वदति सततं सर्वजनता:॥५४॥

"द्विजे देवे धेनौ गणपतिगुरौ शास्त्रकथने
क्रतौ ज्योतिश्शास्त्रेऽप्यगमनिगमेष्वर्थपरके
सदा श्रद्धा धार्या, न कुरुत कुतर्कान् क्वचिदरे"
इति प्राह स्वामी मनुजशुभधर्मान् शिवजपी॥५५॥

शिखा धार्या,कार्यं सुरमुनिपितृप्रीणनमपि
स्वके भाले देवानुगम-तिलकाँश्चैव कुरुत
त्रिकाले सन्ध्योपासनमपि चरेयुर्द्विजजना:!

स्वधर्मश्रद्धाया: प्रतिदिशमरे सारय रसम्॥५६॥

स्वकं पापं हर्तुं सुरसलिलदेवीं व्रजत रे
धियां जाड्यं हन्तुं मुनिचरणसेवां कुरुत रे
जनेर्जालं दग्धुं जपत शिवमित्येव सुखदं
वदेद्यस्स स्वामी नवयुवकधर्मान् श्रयतु मे॥५७॥

अरे मासे वर्षे व्रज नरवरं श्रीगुरुजनान्
मुदा द्रष्टुं गङ्गां, पशुपतिसुसेकाय चल रे
क्व मूढो भ्रान्तोऽसि विविधधनमायासु तृषितस्
स्मराक्रान्तोऽशान्तस्, सुरतटिनि! पापं शमय व: ॥५८॥

क्वचिद्दिल्यां वास: क्वचिदथ च काशीं व्रजसि रे
हरिद्वारं भोपालमपि नर! यासीति मथुरां
क्वचित्त्वं मेवाड़े वससि बुध! विस्मृत्य सुहृदो
ह्यरे षाण्मासे तु व्रज नरवरं स्वां गुरुभुवम्॥५९॥

स्मरेद्वर्षे वर्षे नवहृदयहर्षे नरवरं
व्रजेत् काले लब्धे स्मृतिनवल-तायै नरवरं
कथा: पूर्वास्स्मर्तुं त्यज पुरजमोहं, नरवरं
द्रुतं याहीत्युक्त्वा, विगतदिनगाथां स्मरति स: ॥६०॥

समायाते वर्णोत्सव इह च होलीति कथिते
व्रजेद् गङ्गानन्दं द्विजजनसुवृन्देन सह रे
बिहाराख्यं घट्टं यतिनिलयशुद्धं वस तदा
यजुष्वारैश्छन्नं नरवरविभिन्नं[4] श्रय तदा॥६१॥

मयूखैराक्रान्तां दिवसपतिरेनां प्रकुरुते
कुटीं वृक्षाच्छन्नां कुशशयनयुक्तां सुमनसां
लताभिर्व्यापृत्य प्रियतरतुलस्याश्च विटपो
विकीर्णैश्चाशासु प्रियजनमनो हृष्यति चिरम्॥६२॥

---

[4] नरवरस्यैव विभिन्नं - एतद्विहारघट्टमित्याशय:

अखण्डे ह्यानन्दे सति चिदि समास्थाय मनसा
सदा स्वात्मारामोऽप्यथ निजजनान् यो रमयति
शतं विप्रान् साधून् यतिततिनतीष्टस्सुखयति
प्रभाते भातीत्थं ह्युपनिषदि सक्तो गुरुवर:[5] ||६३||

सदा सेव्यो भव्याश्रमपद उतैषां सुमनसां
मुदा वासश्श्लाघ्यो विरमयति दु:खानि जगत:
विरक्तानां साकाश्यमपि लभतां चेत्क्षणभवं
विपत्तिघ्नं तत्सच्छमयति मनोभ्रान्तिमथ वै||६४||

लघूञ्ज्येष्ठान् प्रेयांस इव सदा मन्यत इति
अरे भ्रातस्साधो! तव, नहि परः, क्वासि सुकृतिन्!
इति प्रीतिं तेषु प्रतिदिनमहो दर्शयति यस्
समर्थश्रीस्वामी हृदयहरणश्शम्भुशरणः||६५||

क्व मे पात्रं वस्त्रं क्व च भवतु कौपीनमथ रे
क्व भस्म त्रैपुण्ड्रं क्व च जपनमाला वदत रे
क्व गङ्गातोयः क्वास्ति कुशभवपावित्र्यकरणी
प्रभाते योऽन्विष्येत् सुरपितृमुनिप्रीतिसुकृतिः||६६||

अरे चायं त्यक्त्वा पिब मधुरदुग्धं द्विज निशि
अरे नित्यं कर्माऽऽश्रय[6] सुरसरीतीरजपकृत्
पुनीह्यात्मानं याहि गणपतिदेवालयमपि
वदेद्यस्स स्वामी हवनवनगामी[7] भवतु मे||६७||

न विप्राणां हानिर्भवतु न गवां घातनमुत
न यज्ञानां कार्यं धनवसनतो[8] लुप्यतु जन

---

[5] विष्णवाश्रममहाराज इत्याशय:।

[6] कर्म- द्वितीयैकवचनम्। आश्रय –(लोण्मध्यमैकवचनम्)

[7] हवनस्य वनं – हवनवनं (यस्मिन् वने हवनं भवति प्रायः, मुनयो यत्र वने वसन्ति तत्र हवनमपि कुर्वन्ति, अतस्तत्स्थलस्य हवनवनसंज्ञा कृता) तत्र गन्तुं तच्छीलः- हवनवनगामी।

[8] धनवसनकारणाद् यज्ञानां कार्यं न लुप्येत ।

न रुद्धो देवानां यजनकथनाद्यः कथमपि
यतेतेत्येवं यश्श्रयतु परितः पुष्पभवनम्||६८||

जलं रक्ष्यं सर्वैरमृतमिव सर्वस्य विपुलम्
विनैतज्जीवेयु: पशुविहगकीटा न मनुजा:
अहो धातुश्चित्रं वरुणकलशच्यावितमिव
जयेन्नीरेशोऽसौ सकलभुवनप्राणशरण: ||६९||

नदी कूपो वापी सरसिजसरांसि श्रुतिसुखा:[9]
चतुष्पादोऽप्सञ्चारिण उत विहङ्गा: बहुविधा:
समं शम्भोर्लीलाकृतमिदमहो दृश्यमखिलं
नर! त्वं चापीत्थं प्रकृतिजनितं रक्ष सुजन||७०||

सुरक्षा नारीणां, पुरुषगणपीडाऽपि न भवेत्
वसेत् सौहार्दैस्स्फूर्तमिव जगदेतद्गृहमिव
समाजस्स्यात् पुंसामिति, च समजो नैव भवतात्
समर्थश्रीस्वामी दिशति बहुतथ्यं हितकरम्||७१||

कवीनां बोद्धॄणां नवमननशीलव्यसनिनां
मखीनां शोद्धॄणां घटपटपदव्यस्तसुधियां[10]
गवामुन्नेतॄणामनुदिननटत्वाभ्यसनिनां[11]
चरेत् सम्मानं वित्तमपि कुरुत- श्रीयतिवच: ||७२||

अहो चर्चा धन्या नरवरधरण्यां शिवमयी
समर्चा सा धन्या भवति करपात्रस्थलभवा
विदर्चा सा मान्या कपटपटहीना पटुकृता
समर्थश्चेत्युक्त्वा दिशति बटुकान्नव्यकथनम्||७३||

---

[9] श्रुतिभ्यां सुखं यैस्ते स्वराः शब्दा वा स्युर्लोके, तैश्शब्दैरन्वितो वा लोकस्स्यादित्याशयः

[10] नैयायिकानाम्। घटपटादिपदेषु व्यस्ता: इमे सुधिय:, अथवा घटपटादिपदेषु व्यस्ता: शोभना धियो येषां ते।

[11] गवामुन्नेतार: - वास्तवेन गोसेवका:। न तु गोभ्यः प्राप्तवित्तेनात्मोदरम्भरिणो धूर्ताः। नटत्वाभ्यसनिनां - प्रसिद्धाभिनेतृणामपेक्षया नवाभिनेतृणां अथवा संस्कृतनाट्यप्रस्तोतृणां तदभ्यासशीलानामपि वित्तादिदानैस्सम्मानं चरेदित्याशय:। (नाट्यस्यापि वेदाङ्गत्वात् तदभ्यासिजनोत्साहवर्धनशीलस्समर्थश्रीरिति भाव:)

अरे वार्ता काऽस्तु श्रियमपि तिरस्कृत्य वसतां
अरे चर्चा काऽस्तु प्रियमपि परित्यज्य वजतां
ह हा हा हा हा हा गमयति च दुःखे लघुसुखं
सदा तस्मात्त्वं रे भज भज भज श्रीशिवगुरुम्||७४||

नरौरा वै काशी न च नरवरत्त्वं लघुपदं
इदं प्राप्यं, हेयं नहि नहि बटो! ब्राह्मण! शृणु
शिखां बद्ध्वा श्रद्धाभृतहृदयवन् रे जप शिवं
अनेनैवं नश्या जनिमृतिजराभीतिरखिला||७५||

पिबेः क्षीरं, नीरं सुरपतिपदान्निस्सृतमिदं
पितॄणाम्पक्षेऽस्मिन् कुरु विधिवदाचारमपि रे
स्वधेत्युच्चार्यैवं सतिलसलिलैस्तर्पय च तान्
द्विजान् काकान् गोर्भोजय, जय जय श्राद्धकरण||७६||

कुशोत्पाट्या मन्त्रैर्ग्रथितशुभरूपा कुरु च तां
प्रयोज्या सन्ध्याकर्मणि पितृमखे देवहवने
कुशानाम्माहात्म्यं त्वृषिमुनिगणैर्गीतमपि यत्
अहो चास्मद्बाबागुरुरपि कुशोत्पाटनपटुः ||७७||

हनूमद्धामाध्यात्मिक इति शुभे स्वाश्रमपदे
वसेच्छ्यामो बाबा पटुतरबटून्पाठयति यस्
स वै नम्योऽस्माकं निखिलगुणधामाऽतिसरलस्
समर्थश्चेत्युक्त्वाश्रुनयनयुतस्तत्स्मरणकृत्||७८||

मिलित्वा सन्मित्रैर् हर हर महादेव भणति
सतो दृष्ट्वा हृष्ट्वा हर हर महादेव वदति
मखस्यान्तोद्घोषे हर हर महादेव कुरुते
अहं कुर्वे सन्तं हर हर महादेव मनसा||७९||

भवेद् भाण्डारेति[12] प्रयतत इव ब्राह्मणहिते
चलेद् भाण्डारार्थं मठमनुमठं योजनमपि
सतां तृप्तिर् भाण्डारगतबहुभोज्यैश्च भवति
कथं भण्डारा स्यादिति मनसि सञ्चिन्तनरत: ||८०||

इतोऽपि स्यात् किञ्चिद् रजतभवदाक्षिण्यमिति च
द्विजेभ्यो हैमं कर्गदभवधनं वाऽपि कुरुताद्
इति श्रीमन्नॄन् प्रेरयति रयिरावान्नहरह:[13]
समर्थश्रीस्वामी समुचितमिदं[14] यच्छतु च मे||८१||

पिबन्ति क्षीरं मृद्धवलघुसुपात्रेऽत्र नकुला:
द्विजोच्छिष्टं क्षिप्तं सुरसरीतटस्थाश्रम इह
तदालक्ष्यं साक्ष्यं नरवरहनूमद्गृहगतं
विलोक्यं तद् बाबागुरुरिति गुरोराश्रमपदे||८२||

अकार्यं कार्यं किं सपदि गदति प्रीतिवचसा
कथं जीवेच्छास्त्रं विशदयति तथ्यं सुमनसा
शिवं यायात्कश्चेति मनसि विचिन्तापर इव
समर्थश्शास्त्रात्मा जयतु शतवर्षं भुवि सुखै: ||८३||

**रवौ सोमे भौमे बुधगुरुभृगुष्वर्कतनये**
**मुहूर्ते प्रत्येकं क्षणकणनिमेषेष्वपि च वा**
**दिने रात्रौ मध्याह्न उत दिवसान्ते दिनमुखे**
**जपेद्राधां श्यामं हरिहरशुभाख्यानपि सदा||८४||**

**वटाश्वत्थाशोकाम्रबकुलतमालार्कखदिरै:**
**कदम्बैर्धत्तूरैरमृतफलवृक्षै: परिवृते**
**अपामार्गैर्दर्भैर्हरिसुखतुलस्या सुरभिके**

---

12 भाण्डानां अरा: पङ्क्तयो यत्र - बहुविधभोजननिर्मितत्वात् - भाण्डारा: (लोके भण्डारेति प्रसिद्धत्वादेवं व्युत्पत्तिशरण्यं कृतम्)

13 रयित: - धनादेव राव: शब्दो येषां ते रयिरावा: धनवन्त:। धनिकयजमाना:।

14 समुचितं इदं दाक्षिण्यं हेमादिभवं मेपि कवयेपि यच्छतु इत्याशय:।

वसेद्यस्स स्वामी तरुसुहृदिव स्वाश्रमपदे॥८५॥

क्वचित्प्रायश्चित्तं ह्युपनयनकर्म क्वचिदथ
क्वचित्केशोत्सर्गः क्वचिदथ च सङ्कल्पधरणं
व्रतं होमश्श्रीनार्मदतटपरिक्रामणमपि
क्वचिद्दीक्षादानं चरति बटुकेभ्यश्शिवपरम्॥८६॥

फलाहारी वारित्यजनपरता दुग्धपरता
क्वचिच्चान्नत्यागो मधुरलवणत्यागपरता
दिने स्वापत्यागः कुशशयनता नग्नपदता
इतीत्थं स स्वामी व्यपगमयति पापक्रमभयम्॥८७॥

तरोर्मूले स्थित्वा विजनविपिने शान्तमनसा
ममोद्देश्यं लोके किमिति सततं चिन्तयतु रे
स्वकक्षे वैकान्ते निशि निजविबोधाय यतताम्
इति स्वात्मज्ञानेरणरततया[15] दृश्यत इव॥८८॥

क्वचिद्भस्मस्नानं जलजजलजालं क्वचिदहो
क्वचित्पुण्योद्भासो धनदधनधन्यः क्वचिदथ
क्वचिकौपीनाढ्यो विगलितशरीरोऽस्मि मनुते
विरागी रागीव श्रितविविधदृश्यो भवतु वः॥८९॥

गुणे वृद्धौ सन्धौ प्रकृतिपररूपेषु विकृतौ
सरूपान्वेषे वाऽऽगमनियमनाऽऽदेशकरणे
विकल्पे सङ्कल्पे विविधपदसूत्रैस्सरति यस्
स शब्दात्मा स्वाम्यक्षरनिलयदेशं दिशतु नः॥९०॥

असौ धूम्रो लोकोऽर्चिषि विशतु वायुश्रिततनुस्
तमो विज्ञानैर्नश्यतु विविधयोनिप्रजभयं
हरिल्लोकान्वेषी भवतु हरिपीयूषहृदयो
रहस्यात्मा स्वामी रहसि हसनो हंस इव नः॥९१॥

---

[15] स्वात्मज्ञानाय ईरणं प्रेरणं , तत्र रतः, तस्य भावस्तया, स स्वामी लोके दृश्यत इत्यर्थः।

यदा सीता प्रीता हृदयतलगीता भवति नो
यदा पीता गङ्गासलिलकणिका मोक्षपददा
परेषां पीडा चेदपि सकलयत्नैरपहृता
तदाऽऽनीता स्वर्लोकपतिपदवी वै भुवि नरैः॥९२॥

पिता माता भ्राता गुरुजनसुहृद्बान्धवगणः
स्वसा कन्या भार्याऽनुगमनसुशीला शुभकरी
सुतश्शिष्यो वाऽन्यः परिचित इवाऽप्यस्तु मखलो
वियुक्तैर्युक्तैर्वा व्यवहृतिपरैस्सेव्य इति रे॥९३॥

गुरूणां साधूनां जपमखरतानामपि च वा
बुधानां देवानां सुकृतिचरितानां क्वचिदहो
विलोक्य श्रेष्ठत्त्वं रचयति कविः पञ्चकमिति
स पञ्चास्यासक्तः प्रथमकवितावाचनरतः[16]॥९४॥

गतो वर्षाकालश्शरदऋतुरेषोऽवतरति
शरद् वीतश्शीतस्तदनु शिशिरः सम्प्रभवति
वसन्तो हेमन्तस्तपनकरकालागत इति
न मुह्येदात्मानं समयगतचक्रेण धृतिमान्॥९५॥

प्रभाते नीरं मध्यदिवसगतस्तक्रमथ च
दिनान्ते दुग्धं चेत्पिबतु, भवताद् रोगरहितः
मनोनीरुक्त्वं स्त्रीरमणकलया प्राप्य भवति
तथायुर्वेदोक्तं वदति जगतस्स्वस्थकरणः॥९६॥

क्व रीतिर्वक्रोक्तिः क्व नवपदयोगः क्व रसता
गभीरोक्तिः क्वाद्य प्रथयति कविः भावरमणं
अलङ्कारौचित्यार्थपरकसुभाषा क्व गुणता
क्व वा वाचां क्रीडाभिरतसुजनो लोक्यत इति॥९७॥

---

[16] पञ्चास्यश्शिवस्तस्मिन् सक्तः। प्रथमा चेयं कविता – वाल्मीकेः कविता –रामायणं, तस्य वाचनरतः।

विदग्धानां वाचां क्षणजनितविद्युन्निभदृशां
वितर्कैर्वृद्धानामथ सुरनिषिद्धार्थसदृशां
वितण्डावादानां झटिति हरति स्वासिसमित-
प्रवाचा यो जालान् यतिवरमहं नौमि मनसा॥९८॥

स वै वीरो धीरो ह्यवति निजमानं निशि दिनं
स वै गण्यो मान्यश्श्रयति परगेहं न च जनः
न दीनं चाटूक्तिं प्रवदति स वै सिंहपुरुषः
इति स्वीयान् शिष्यान् भणति कुरुते यस्स सुजनः॥९९॥

म्रियेतान्नैर्हीनो जललवविहीनश्च तृषया
भ्रमेन्नग्नश्चैवं वसनरहितो रिक्तजठरः
न चाधर्मश्श्रेयो न च कुपथगामी भवतु वै
श्रयेद्यस्सस् स्वामी हितकरवचश्श्रावयतु माम्॥१००॥

हिमांशो! त्वं कार्ष्ण्यं व्रजसि लभसे चायमपि यत्
ततस्त्यक्त्वा विप्र! प्रभव निजशास्त्रे मतिधन!
मम स्वामिन्! काव्यं झरति सततं तच्छ्रयणतः
त्यजेयं नो जाने कथमिव निजप्रीतिजनकम्॥१०१॥

शतश्लोकैर्यस्मैरविहतगतिश्रीविरचितैः
प्रबन्धोऽयं दत्तो मखहुतवहानामिव सुखं
समर्थश्रीस्वामी कुसुमसदृशैर्भावनिचयैः
क्वचिद्देवाभासाश्रितमिममनुप्राप्य मुदितः॥१०२॥

स यो यज्ञेशानामनुदिनमहो दिव्यकृपया
मुदा स्नातस्त्रातस्सुरगणसुदृष्ट्येक्षित इव
स पुण्योद्रेकत्वाद्विगलितजगज्जालगतिको
भजेदानन्त्यं वाञ्छति कविहिमांशुर्हृदि सदा॥१०३॥

समुच्झित्य स्वीयं गृहधनपदादीँश्च सहसा
परब्रह्माकाशोड्डयनपरपक्षीव रहसा
स्त्रियो मूत्रागारो नहि नहि न दृष्टश्च घृणितो

भ्रमध्वंसी स्वामी श्रुतिमति पथि प्रेषयतु वः||१०४||

त्रिपत्रैर्यो बिल्वैरखिलभुवनत्रीन् विजयते
चतुर्वेदैर्यो वाऽर्जयति सकलाशासु विजयं
जयाद्धीनो[17] दीनोद्धरणमनसा धावितबुधं
नमस्कुर्मो लोकावनपवनवाहं शिवधनम्||१०५||

अरे स्वामिन्! दृष्ट्वा सकलसुरसौख्यैकशरणं
बृहस्पत्यर्थानां सरलतमभाष्यप्रदमुख!
अहो गाङ्गेयोक्त्या सुरसलिलदेव्याश्च कथया
जनान् पुण्ये मार्गे प्रणुदति भवाँस्त्र्यम्बक! वरः||१०६||

वयं भोगासक्तास्त्वयि च शिवनिष्ठा गुरुतरी
वयं हाऽऽशासक्तास्त्वयि विरतिरस्माच्च जगतो
यमाद्भीतास्स्वामिन्! हरिगुणकथासूत्सकतया
त्वदास्यात्संश्रोतुं प्रयतनपरास्त्वामुपगता||१०७||

मया स्वीयोद्गारैर्बहुविधमनोजातकुसुमैः
समर्थश्रीस्वामिश्रितविविधचिन्ताविलसितैः
कृतं काव्यं कण्डूमिव शमयितुं यच्छिखरिणी-
निबद्धं सम्बद्धं श्रुतियतिसुखैर्बोधजनकम्||१०८||

*****************

||को जानाति हि लोकेऽस्मिन् कदा किं किं भविष्यति। समर्थश्री कविश्चैव हिमांशुश्चागमिष्यति||

*****************

|| इति श्रीगोपालजीत्यपरनामविभूषितानां समर्थश्रीरित्याख्याविख्यातानां
श्रीमत्त्र्यम्बकेश्वरचैतन्यमहाराजाणां हिमांशुगौडकृतं विविधभावसुरभितं शिखरिणीशतकं सम्पूर्णम्||

---

[17] लौकिकवस्तुजयाद्धीनः। अथवा लौकिकवस्तुजयेऽपि तस्माद्धीन इव य आचरतीति भावार्थः।